*Poona Oriental Series 66*

॥ श्रीः ॥

पण्डितराज-राजतिलक-जगन्नाथकृत

# गंगालहरी ( समश्लोकीसह )

## गंगाष्टकं च

# Gangā-lahari of Pandit Jagannāth

( *Poem in prais*
तूज उठती
॥ भंगूत निग








पुणें

ओरिएंटल् बुक एजन्सी

१९३९

किंमत ०—४—०

समृद्धं सौभाग्यं सकलवसुधायाः किमपि तन्
महैश्वर्यं लीलाजनितजगतः खंडपरशोः ।
श्रुतीनां सर्वस्वं सुकृतमथ मूर्तं सुमनसां
सुधासौंदर्यं ते सलिलमशिवं नः शमयतु ॥ १ ॥

दरिद्राणां दैन्यं दुरितमथ दुर्वासनहृदां
द्रुतं दूरीकुर्वन्सकृदपि गतो दृष्टिसरणिम् ।
अपि द्रागाविद्याद्रुमदलनदीक्षागुरुरिह
प्रवाहस्ते वारां श्रियमयमपारां दिशतु नः ॥ २ ॥

उदञ्चन्मार्तंडस्फुटकपटहेरंबजननी–
कटाक्षव्याक्षेपक्षणजनितसंक्षोभनिवहाः ।
[illegible] हरशिरसि गंगातनुभुवः
तर[illegible] दुरितभयभङ्गाय भवताम् ॥ ३ ॥

तवालंबादंब स्फुरदलघुगर्वेण सहसा
मया सर्वेऽवज्ञासरणिमथ नीताः सुरगणाः ।
इदानीमौदास्यं भजसि यदि भागीरथि तदा
निराधारो हा रोदिमि कथय केषामिह पुरः ॥ ४ ॥

स्मृतिं याता पुंसामकृतसुकृतानामपि च या
हरत्यंतस्तंद्रां तिमिरमिव चंद्रांशुसरणिः ।
इयं सा ते मूर्तिः सकल-सुर-संसेव्यसलिला
ममांतःसंतापं त्रिविधमपि पापं च हरताम् ॥ ५ ॥

अपि प्राज्यं राज्यं तृणमिव परित्यज्य सहसा
विलोलद्वानीरं तव जननि तीरं श्रितवताम् ।
सुधातः स्वादीयस्सलिलभरमातृप्ति पिबताम्
जनानामानंदः परिहसति निर्वाणपदवीम् ॥ ६ ॥

अशेषां भूतींचें विपुलतर सौभाग्य मिरवी
जगातें लीलेनें करि शिव तया भूतिपदवी।
श्रुतींची तत्त्वोक्ती सुकृत विबुधांचेंचि अथवा
सुधाबंधू तूझें सलिल अमुच्या नासु अशिवा ॥ १ ॥

दरिद्रांच्या दैन्या मलिनहृदयांच्या अघबला
हरी एक्या वारीं त्वरित पडतां नेत्रकमला।
अविद्यावृक्षाचा हनन करि दीक्षागुरुच हा
तुझा देवू तोयप्रवह अमुतें भूतिनिवहा ॥ २ ॥

उदेला मात्सर्यें गजवदनमातास्वकपटें
कटाक्षानें पाहे तरि मनिं महाक्रोध झगटे।
अशा आविर्भावें पृथुललहरी तूज उठती
शिरीं शंभूच्या त्या जनकलुष भंगूत निगुती ॥ ३ ॥

बळें आलंबाच्या तव जननि गर्वोद्धतमनें
अवज्ञेचे पंथीं सकळ सुर मीं पावविदिनें।
अतां गंगे माझेविषयिं जरि चित्तीं उबगसी
रडूं तेव्हां कोणाजवळि मज सांगे गति कशी ॥ ४ ॥

न केलें सत्कर्माचरण जरि त्याणीं हि स्मरतां
तयांच्या जाड्यातें हरसि तिमिरा जेंवि सविता।
अशी तूझि ते हे तनु सुरगणां सेव्य सकळां
त्रिधा माझ्या पापा अणिक हरु संताप सगळा ॥ ५ ॥

त्यजोनी साम्राज्य तृणसदृश जे कां शुभमती
तुझ्या तीरीं येतां वलिललितनीरांत वसती।
सुधेहूनी स्वादू सलिल पिउनी तृप्त जन जे
तयांच्या आनंदें गुणरहित मोक्षासि हसिजे ॥ ६ ॥

प्रभाते स्नातीनां नृपतिरमणीनां कुचतटी-
गतो यावन्मातर्मिलति तव तोयैर्मृगमदः ।
मृगास्तावद्वैमानिकशतसहस्रैः परिवृता
विशंति स्वच्छंदं विमलवपुषो नंदनवनम् ॥ ७ ॥

स्मृतं सद्यः स्वांतं विरचयति शान्तं सकृदपि
प्रगीतं यत्पापं झटिति भवतापं च हरति ।
इदं तद्गंगेति श्रवणरमणीयं खलु पदं
मम प्राणप्रांतर्वदनकमलांतर्विलसतु ॥ ८ ॥

यदंतः खेलंतो बहुलतरसंतोषभरिता
न काका नाकाधीश्वरनगरसाकांक्षमनसः ।
निवासाल्लोकानां जनिमरणशोकापहरणं
यदेतत्ते तीरं श्रमशमनधीरं भवतु नः ॥ ९ ॥

न यत्साक्षाद्वेदैरपि गलितभेदैरवसितं
न यस्मिन् जीवानां प्रसरति मनोवागवसरः ।
निराकारं नित्यं निजमहिमनिर्वासिततमो
विशुद्धं यत्तत्त्वं सुरतटिनि तत्त्वं न विषयः ॥ १० ॥

महादानैर्ध्यानैर्बहुविधवितानैरपि च यन्
न लभ्यं घोराभिः सुविमलतपोराशिभिरपि ।
अचिंत्यं तद्विष्णोः पदमखिलसाधारणतया
ददाना केनासि त्वमिह तुलनीया कथय नः ॥ ११ ॥

नृणामीक्षामात्रादपि परिहरंत्या भवभयं
शिवायास्ते मूर्तेः क इह महिमानं निगदतु ।
अमर्षम्लानायाः परममनुरोधं गिरिभुवो
विहाय श्रीकंठः शिरसि नियतं धारयति याम् ॥ १२ ॥

नृपस्त्रीवक्षोजीं मृगमद विभूषार्थ असतां
प्रभातस्नानें तो जननि तव तोयांत मिळतां ।
क्षणें देवश्रेणीसह मृग तया नंदनवनीं
स्व-इच्छेनें जाती अतिविमलदेहासि धरुनी ॥ ७ ॥

मना आणी शांती स्मरण करितां ते क्षणभरी
गिती गातां पापा त्वरित भवतापाप्रति हरी ।
अहो तें हें कर्णा मधुरतर गंगापद असें
असो प्राणत्यागीं मुखकमळिं माझ्या समरसें ॥ ८ ॥

जळामध्यें क्रीडा करुनि बहुतोषेंचि असती
तया काकांचेही सुरपतिपुरीं काम नसती ।
निवासें लोकांचें हरि जनिमृतीदुःख मानिंचें
असें तूझें तीर श्रम परिहरू सर्व अमुचे ॥ ९ ॥

दिसेना जें वेदां गतनिखिलभेदांसि नयनीं
न जेथें जीवाची प्रसरति मनोवाक्यसरणी ।
अकारानाशातें त्यजुनि निजरूपींच वसणें
जया तत्त्वातें तूं विषय म्हणती मूढमतिनें ॥ १० ॥

महादानें ध्यानें व्रतनियमयज्ञादिकविधी
इहीं जें लाभेना विमलतपकर्त्यांसहि कधीं ।
असें तें विष्णूचें पद सहज तूं देशि ललिते
समत्वीं त्या तूतें कवण तुलिजे सांग अमुतें ॥ ११ ॥

विलोकीतां जीतें भवभय जनाचें परिहरि
तया त्वन्मूर्तीचा अतुल महिमा कोण विवरी ।
अतिक्रोधें खिन्नें करि हट उभा तो नगणनीं
प्रयत्नें श्रीशंभू तुज निजशिरीं ठेवि जननी ॥ १२ ॥

विनिंद्यान्युन्मत्तैरपि च परिहार्याणि पतितै–
रवाच्यानि व्रात्यैः सपुलकमपास्यानि पिशुनैः ।
हरंती लोकानामनवरतमेनांसि कियताम्
कदाप्यश्रांता त्वं जगति पुनरेका विजयसे ॥१३॥
स्खलंती स्वर्लोकादवनितलशोकापहृतये
जटाजूटग्रंथौ यदसि विनिबद्धा पुरभिदा ।
अये निर्लोभानामपि मनसि लोभं जनयतां
गुणानामेवायं तव जननि दोषः परिणतः ॥ १४ ॥
जडानंधान् पंगून् प्रकृतिबधिरानुक्तिविकलान्
ग्रहग्रस्तानस्ताखिलदुरितनिस्तारसरणीन् ।
निलिंपैर्निर्मुक्तानपि च निरयांतर्निपततो
नरानंब त्रातुं त्वमिह परमं भेषजमसि ॥ १५ ॥
स्वभावस्वच्छानां सहजशिशिराणामयमपा–
मपारस्ते मातर्जयति महिमा कोऽपि जगति ।
मुदा यं गायंति द्युतलमनवद्यद्युतिभृतः
समासाद्याद्यापि स्फुटपुलकसांद्राः सगरजाः ॥ १६ ॥
कृतक्षुद्रैनस्कानथ झटिति संतप्तमनसः
समुद्धर्तुं संति त्रिभुवनतले तीर्थनिवहाः ।
अपि प्रायश्चित्तप्रसरणपथातीतचरितान्
नरान् दूरीकर्तुं त्वमिव जननि त्वं विजयसे ॥१७॥
निधानं धर्माणां किमपि च विधानं नवमुदां
प्रधानं तीर्थानाममलपरिधानं त्रिजगतः ।
समाधानं बुद्धेरथ खलु तिरोधानमधियां
श्रियामाधानं नः परिहरतु तापं तव वपुः ॥१८॥

मदोन्मत्तव्रात्याधमपतितपैशून्यनिकरीं
इहीं हीं जीं त्रासें त्यजियलिं सकंपें अतिदुरीं ॥
जनांचीं तीं पापें सतत शमवीतां न शिणली
अशी तूंची एक प्रगट विभवें नांदशि भली ॥ १३ ॥

अलीसी स्वर्लोकाहुनि अवनिच्या शोकहरणीं
अशा तूतें बांधी शिव निजकपर्दीं निशिदिनीं ॥
अयी निर्लोभाला उपजविति लोभा गुण असे
तुझे त्यांचा प्रादुर्भव जननि ऐसा फळतसे ॥ १४ ॥

जडांधापंगूतें बहुबधिर वाणीविकळ जे
ग्रहद्वेषी ज्यांचें अघहनन यत्नें न घडिजे ॥
सुरींही सोडीले कुनर नरकाचेचि गमनीं
अशांतें रक्षाया पटु जननि तूं औषध गुणी ॥ १५ ॥

स्वभावें जीं स्वच्छें सहज अतिशीतें तव जळें
तयांच्या उत्कर्षें यश सकळ लोकांत उजळे ॥
जया गाती तोषें सगरसुत रोमांच धरुनी
गति स्वर्लोकीं त्यां तव विभवयोगेंचि जननी ॥ १६ ॥

घडे दैवें किंचित् कलुष परि संतापति मनीं
अशांतें ताराया असति बहु तीर्थें त्रिभुवनीं ॥
जयां प्रायश्चित्तें नसति कुनरां दे गति अशी
समर्था या लोकीं तुजसम अयी तूंचि असशी ॥ १७ ॥

अगार श्रेयांचें सकळजनसंतोष अवनीं
अशेषां तीर्थांची गुरुरुचिर जीची त्रिभुवनीं ॥
मतीशीं सौख्या दे मलिन मतिला दुर्लभ रुची
असें धाम श्रीचें तव वपु हरू आग अमुची ॥ १८ ॥

पुरो धावं धावं द्रविणमदिराघूर्णितदृशां
महीपानां नानातरुणतरखेदस्य नियतम् ।
ममैवायं मंतुः स्वहितशतहंतुर्जडधियो
वियोगस्ते मातर्यदिह करुणातः क्षणमपि ॥ १९ ॥

मरुल्लीलालोलल्लहरिलुलिताम्भोजपटली-
स्खलत्पांसुव्रातच्छुरणविसरत्कौंकुमरुचि ।
सुरस्त्रीवक्षोजक्षरदगरुजंबालजटिलं
जलं ते जंबालं मम जननजालं जरयतु ॥ २० ॥

समुत्पत्तिः पद्मारमणपदपद्मामलनखात्
निवासः कंदर्पप्रतिभटजटाजूटभवने ।
अथाऽयं व्यासंगो हतपतितनिस्तारणविधौ
न कस्मादुत्कर्षस्तव जननि जागर्तु जगतः ॥ २१ ॥

नगेभ्यो यांतीनां कथय तटिनीनां कतमया
पुराणां संहर्तुः सुरधुनि कपर्दोऽधिरुरुहे ।
कया वा श्रीभर्तुः पदकमलमक्षालि सलिलै-
स्तुलालेशो यस्यां तव जननि दीयेत कविभिः ॥२२॥

विधत्तां निःशंकं निरवधिसमाधिं विधिरहो
सुखं शेषे शेतां हरिरविरतं नृत्यतु हरः ।
कृतं प्रायश्चित्तैरलमथ तपोदानयजनैः
सवित्री कामानां यदि जगति जागर्षि जननि ॥२३॥

अनाथः स्नेहार्द्रां विगलितगतिः पुण्यगतिदां
पतन्विश्वोद्धर्त्रीं गदविगलितः सिद्धभिषजम् ।
सुधासिन्धुं तृष्णाकुलितहृदयो मातरमयं
शिशुः संप्राप्तस्त्वामहमिह विदध्याः समुचितम् ॥२४॥

मदें श्रीच्या अंधप्रभु म्हणविती मद्यपि जसे
पुढें त्यांच्या धांवें श्रमसहित मी लोभविवशें ॥
मतीच्या मंदत्वें त्यजुनि तुज नाशीं हितशता
अयी हा माझाची अनय करुणा तूज उचिता ॥ १९ ॥

स्फुरे वायू तेणें उठति लहरी तैं कमळिंचा
गळे रेणू तेणें सलिल विलसे कुंकुमरुचा ॥
जया देवस्त्रींच्या स्तनअगरुचा पंक मिसळे
बहू धांवे ऐसें तव जळ हरू जन्म सगळे ॥ २० ॥

बरी उत्पत्ती श्रीरमणचरणाच्या नखिंहुनी
असावें शंभूच्या निशिदिनिं जटाजूटभवनीं ॥
जपावें सर्वस्वें सतत पतितोद्धारकरणीं
नसावें कां माते तरि मग तुझें गौरव जनीं ॥ २१ ॥

नद्या शैलाहूनी किति न निघती त्या भुमितळीं
वदावें शंभूच्या शिरिं गुरुपणें कोण जडली ॥
स्वतोयें कोणें श्रीदयितचरणालागिं धुतिलें
जियेतें योजावें जव तुज न लेशाप्रतिमलें ॥ २२ ॥

अनुष्ठीं एकांतीं निरवधिसमाधीप्रति विधी
निजो शेषीं सौख्यें हरि हर करो तांडवविधी ॥
तपें कृच्छ्रें दानें उगलि यजमानासि न पवे
प्रदात्री कामाची जरि जगिं तुझी मूर्ति मिरवे ॥ २३ ॥

अनाथ स्नेहाळे गतिविहिन मी तूं सुगतिदा
जगोद्धारा तूं, मी पतित, गद मी, तूं अरिगदा ॥
सुधाब्धी तूं, मी जो तृषित, अयि तूझा शिशु असा
तशा तूतें आलों शरण पथ योजी उचितसा ॥ २४ ॥

विलीनो वै वैवस्वतनगरकोलाहलभरो
गता दूता दूरं क्वचिदपि परेतान् मृगयितुम् ॥
विमानानां व्रातो विदलयति वीथीर्दिविषदां
कथा ते कल्याणी यदवधि महीमण्डलमगात् ॥२५॥

स्फुरत्कामक्रोधप्रबलतरसंजातजटिल-
ज्वरज्वालाजालज्वलितवपुषां नः प्रतिदिनम् ॥
हरन्तां संतापं कमपि मरुदुल्लासलहरी-
छटाचञ्चत्पाथःकणसरणयो दिव्यसरितः ॥ २६ ॥

इदं हि ब्रह्माण्डं सकलभुवनाभोगभवनं
तरंगैर्यस्यांतर्लुठति परितस्तिदुकमिव ।
स एष श्रीकंठप्रविततजटाजूटजटिलो
जलानां संघातस्तव जननि तापं हरतु नः ॥ २७ ॥

त्रपंते तीर्थानि त्वरितमिह यस्योद्धृतिविधौ
करं कर्णे कुर्वन्त्यपि किल कपालिप्रभृतयः ।
इमं तं मामंब त्वमियमनुकम्पार्द्रहृदये
पुनाना सर्वेषामघमथनदर्पं दलयसि ॥ २८ ॥

श्वपाकानां व्रातैरमितविचिकित्साविचलितैर्
विमुक्तानामेकं किल सदनमेनःपरिषदाम् ।
अहो मामुद्धर्तुं जननि घटयन्त्याः परिकरम्
तव श्लाघां कर्तुं कथमिव समर्थो नरपशुः ॥ २९ ॥

न कोऽप्येतावन्तं खलु समयमारभ्य मिलितो
यदुद्धारादाराद्भवति जगतो विस्मयभरः ।
इतीमामीहां ते मनसि चिरकालं स्थितवती-
मयं संप्राप्तोऽहं सफलयितुमंब प्रणय नः ॥ ३० ॥

विराले निःशेषें यमनगरिंचे जे गलबले
पहाया प्रेतांतें अवनि फिरती दूत उगले ।
विमानांच्या संघें विबुधपथ सोडी स्वनियमा
जसा आला भूमीं सुखकर तुझा कीर्तिमहिमा ॥ २५ ॥

स्फुरे कामक्रोध ज्वर बहुकराळार्चिक वनीं
जळे तेणें काया जननि अमुची ही प्रतिदिनीं ।
महोर्मींच्या योगें उसळति तुझे तोयकण ते
तया संतापातें शमवुत अहो देवसरिते ॥ २६ ॥

अहो हे ब्रह्मांडाकृति सकळ लोकांसह बरी
रुळे जेथें ऊर्मीभ्रमणविवशें तिंदुकपरी ।
असा तो हा मृत्युंजय पृथु कपर्दी जडिनला
तुझा श्रीतोयौघ प्रशमन करू पापवहिला ॥ २७ ॥

जयाच्या उद्धाराविषयिं बहु तीर्थेंहि पळती
स्वकानीं हस्तातें मग शिवशिवादीक धरिती ।
असा मी त्या मातें पुनित करिशी तूं जननिये
जगीं पापघ्नाच्या हरिसि गुरुगर्वास सदये ॥ २८ ॥

श्वपाकांच्या श्रेणीहुनि बहुत नीचांत गणना
न मर्यादा पापा अघसदन मी एकचि म्हणा ।
अशाला ताराया कटि कसुनि होसी निजसखे
कशी तुझी श्लाघा द्विपदपशु जो तो करुं शके ॥ २९ ॥

न कोणी हे ऐसा अजिवरि मला प्राप्त जन कीं
जयाच्या उद्धारें अखिल अवनी मस्तक तुकी ।
अशी इच्छा पोटीं बहु दिवस होती तुज तिला
कराया मी आलों सफळ समजो भाव तुजला ॥ ३० ॥

श्ववृत्तिव्यासंगो नियतमथ मिथ्याप्रलपनं
कुतर्केष्वभ्यासः सततपरपैशुन्यमननम् ।
अपि श्रावं श्रावं मम तु पुनरेवं गुणगणा—
नृते त्वत्को नाम क्षणमपि निरीक्षेत वदनम् ॥३१॥
विशालाभ्यामाभ्यां किमिह नयनाभ्यां खलु फलं
न याभ्यामालीढा परमरमणीया तव तनुः ।
अयं हि न्यक्कारो जननि मनुजस्य श्रवणयोर्
ययोर्नान्तर्यातस्तव लहरिलीलाकलकलः ॥ ३२ ॥
विमानैः स्वच्छन्दं सुरपुरमयन्ते सुकृतिनः
पतन्ति द्राक् पापा जननि नरकान्तः परवशाः ।
विभागोऽयं तस्मिन्नशुभमयमूर्तौ जनपदे
न यत्र त्वल्लीला दलितमनुजाशेषकलुषा ॥ ३३ ॥
अपि घ्नन्तो विप्रानविरतमुशन्तो गुरुसतीः
पिबन्तो मैरेयं पुनरपि हरन्तश्च कनकम् ।
विहाय त्वय्यन्ते तनुमतनुदानाध्वरजुषा—
मुपर्यंव क्रीडन्त्यखिलसुरसंभावितपदाः ॥३४॥
अलभ्यं सौरभ्यं हरति सततं यः सुमनसां
क्षणादेव प्राणानपि विरहशस्त्रक्षतहृदां ।
त्वदीयानां लीलाचलितलहरीणां व्यतिकरात्
पुनीते सोऽपि द्रागहह पवमानस्त्रिभुवनम् ॥ ३५ ॥
कियन्तः सन्त्येके नियतमिह लोकार्थघटकाः
परे पूतात्मानः कति च परलोकप्रणयिनः ।
सुखं शेते मातस्तव खलु कृपातः पुनरयं
जगन्नाथः शश्वत्त्वयि निहितलोकद्वयभरः ॥ ३६ ॥

स्वभाव श्वानाचा तदुपरि असत्यार्थ वदनीं
कुतर्का घोकावें अवडि परपैशुन्यमननीं ।
असे माझे दोषप्रचुर गुण कानीं परिसुनी
मुखा पाहे कोण क्षणहि तुजवांचूनि जननी ।। ३१ ।।

वृथा ते मोठेही नयन तुझि ज्यांहीं तनु कधीं
विलोकीली नाहीं जरि जननि लावण्यउदधी ।
न वर्णावें त्याला अधमनरकर्णाकृतिबिळा
न ऐकीला जींहीं मधुर तव लीलागलबला ।। ३२ ।।

घडे ज्यांला पुण्याचरण तिहिं जावें सुरपुरीं
पडावें पापिष्ठीं विषम नरकीं घोरविवरीं ।
व्यवस्था ऐशी हे अशुभमय देशांतचि असे
तुझी लीला जेथें सकळ अघहर्त्री न विलसे ।। ३३ ।।

वधीती विप्रांतें सतत गुरूदारानिरत जे
हरावें स्वर्णातें मलिनमदिरापानहि किजे ।
महत्पापी ऐसे त्यजिति निजदेहां तव तिरीं
करीती क्रीडा ते कृतमखनराहूनि उपरी ।। ३४ ।।

सुगंधापुष्पांचें हरण नियमें संतत किजे
वियोगाच्या शस्त्रें क्षत हरिति तत्प्राणहर जे ।
असा वायू तूझा चलितलहरीयोगविभवें
स्वसंचारें माते करि भुवन हें शुद्ध अवघें ।। ३५ ।।

किती या लोकांच्या स्थितिस सुमती सांग करिती
पवित्रात्मे कोणी सतत परलोकास जपती ।
कृपापांगे तूझ्या सुखरुप निजें मीं धणिवरी
समर्पूनी लोकद्वय जननि चिंता तुजवरी ।। ३६ ।।

भवत्या हि व्रात्याधमपतितपाखंडपरिषत्-
परित्राणस्नेहः श्लथयितुमशक्यः खलु यथा ।
ममाप्येवं प्रेमा दुरितनिवहेष्वंब जगति
स्वभावोऽयं सर्वैरपि खलु यतो दुष्परिहरः ॥ ३७ ॥

प्रदोषान्तर्नृत्यत्पुरमथनलीलोद्धृतजटा-
तटाभोगप्रेङ्खल्लहरिभुजसंतानविधुतिः ।
बिलक्रोडक्रीडज्जलडमरुटंकारसुभग-
स्तिरोधत्तां तापं त्रिदशतटिनीतांडवविधिः ॥ ३८ ॥

सदैव त्वय्येवार्पितकुशलचिंताभरमिमं
यदि त्वं मामंब त्यजसि समयेऽस्मिन्सुविषमे ।
तदा विश्वासोऽयं त्रिभुवनतलादस्तमयते
निराधारा चेयं भवति खलु निर्व्याजकरुणा ॥ ३९ ॥

कपर्दादुल्लस्य प्रणयमिलदर्धांगयुवतेः
पुरारेः प्रेंखन्त्यो मृदुलतरसीमंतसरणौ ।
भवान्या सापत्न्यस्फुरितनयनं कोमलरुचा
करेणाक्षिप्तास्ते जननि विजयन्तां लहरयः ॥ ४० ॥

प्रपद्यन्ते लोकाः कति न भवतीमत्रभवती-
मुपाधिस्तत्रायं स्फुरति यदभीष्टं वितरसि ।
शपे तुभ्यं मातर्मम तु पुनरात्मा सुरधुनि
स्वभावादेव त्वय्यमितमनुरागं विधृतवान् ॥ ४१ ॥

ललाटे या लोकैरिह खलु सलीलं तिलकिता
तमो हन्तुं धत्ते तरुणतरमार्तण्डतुलनाम् ।
विलुंपंती सद्यो विधिलिखितदुर्वर्णसरणिं
त्वदीया सा मृत्स्ना मम हरतु कृत्स्नामपि शुचम् ॥४२॥

जगीं जे कां व्रात्यादिक अधम देह प्रकटले
तयां रक्षावें ही अविट करुणा तूज न टळे ।
सुटेना तैसेंची दुरित विजयीं प्रेम मज कीं
स्वभावातें कोणी त्याजि जनिं अशी गोष्ट लटकी ॥ ३७ ॥

जटा शंभूनृत्यें हलु न हलती वीचिहि मधीं
तुझ्या तें जी जाणो भुज करिति लास्योचित विधी ।
महादोलें वाजे जळनिकर तो तोचि डमरू
असा तूझा नृत्योत्सव जननि तापाप्रति हरू ॥ ३८ ॥

तुझ्या ठायीं ठेवी निजकलुषचिंता निशिदिनीं
तया मातें तेव्हां त्यजसि विषमीं विश्वजननी ।
अनाथस्नेहाळे त्रिजगिं तयिं विश्वासचि बुडे
निराधारें झालें सहज मग कारुण्य उघडें ॥ ३९ ॥

अलिंगी जैं प्रेमें गिरिश शिरिं जैशी न तशि रे
शिरीं अंबेच्या तें जव लहरिचें जाळ उतरे ।
तयातें हस्ताब्जें असुडि नगभूरक्तनयना
अशी सापत्नाची विदित तव लीला त्रिभुवना ॥ ४० ॥

शरण्यें लोकांला शरण तुज येथेंचि करणें
उपाधि व्यासंगास्तव पर अभीष्टा वितरणें ।
मदात्मा हा मातें शपिल तुज निष्पाप वदतों
स्वभावें त्वद्रूपीं अतुल अनुरागासि धरितों ॥ ४१ ॥

जिला एके काळीं जन निजकपाळीं तिलकितां
हरे दुर्वर्णाची लिपि जिस विधी सूज्ञ लिहितां ।
तमाच्या जे नाशाविषयिं धरि मार्तंड उपमा
अशी तूझी माती मम परिहरू शोकगरिमा ॥ ४२ ॥

नरान्मूढांस्तत्तज्जनपदसमासक्तमनसो
हसंतः सोल्लासं विकचकुसुमव्रातमिषतः ।
पुनानाः सौरभ्यैः सततमलिनो नित्यमलिनान्
सखायो नः सन्तु त्रिदशतटिनीतीरतरवः ॥ ४३ ॥

यजन्त्येके देवान्कठिणतरसेवांस्तदपरे
वितानव्यासक्ता यमनियमरक्ताः कतिपये ।
अहं तु त्वन्नामस्मरणकृतकामस्त्रिपथगे
जगज्जालं जाने जननि तृणजालेन सदृशम् ॥ ४४ ।

अविश्रान्तं जन्मावधिसुकृतजन्मार्जनकृतां
सतां श्रेयः कर्तुं कति न कृतिनः संति विबुधाः ।
निरस्तालंबानामकृतसुकृतानां तु भवतीं
विनाऽमुष्मिल्लोके न परमवलोके हितकरम् ॥ ४५ ॥

पयः पीत्वा मातस्तव सपदि यातः सहचरै-
र्विमूढैः संरन्तुं क्वचिदपि न विश्रांतिमगमम् ।
इदानीमुत्सङ्गे मृदुपवनसंचारशिशिरे
चिरादुन्निद्रं मां सदयहृदये शायय चिरम् ॥ ४६ ॥

बधान द्रागेव द्रढिमरमणीयं परिकरं
किरीटे बालेन्दुं नियमय पुनः पन्नगगणैः ।
न कुर्यास्त्वं हेलामितरजनसाधारणतया
जगन्नाथस्यायं सुरधुनि समुद्धारसमयः ॥ ४७ ॥

शरच्चंद्रश्वेतां शशिशकलश्वेतालमुकुटां
करैः कुंभांभोजे वरभयनिरासौ च दधतीम् ।
सुधाधाराकाराभरणवसनां शुभ्रमकर-
स्थितां त्वां ये ध्यायन्त्युदयति न तेषां परिभवः ॥४८॥

सुजन्मा पावूनी नरपशु कुदेशांत मरती
तयां पुष्पव्याजें हसुनि अगतीतें सुचविती ।
स्वसौगंधें नित्य भ्रमरकुलमालिन्य हरिते
घडो ऐशा तूझ्या पूलिनतरुंचें सख्य अमुतें ॥ ४३ ॥

महाकष्टें सेवा करुनि किति देवांसि यजिती
दुजे यज्ञीं निष्ठा कितिक मन योगें दमविती ।
असा मी तो तूझ्या स्मरणपरितोषेंचि फुगुनी
जगातें या लेखीं तृणसम अवो विश्वजननी ॥ ४४ ॥

सुकर्में जे जन्मप्रभृति विधिनें नित्य करिती
तयां संरक्षाया कितिक सुर हे दक्ष असती ।
परंतु जो पापी सहजचि अनाधार कुमती
अशाला ताराया तुजविण दिसेना परगती ॥ ४५ ॥

पया तूझ्या माते पिउनि शिशुभावें रतिहिना—
सवें क्रीडे गेलों अधिक घडलें दुःखचि मना ।
निजोत्संगीं आतां निजवि मज वो स्वस्थ जननी
सुखस्पर्शें तापा हरि पवन जेथें अनुदिनीं ।। ४६ ॥

कटी बांधीं आधीं वरि अवरि वेगें परिकरा
ललाटीं संरक्षीं दृढ उरगबंधें शशिधरा ।
न कीजे त्वां हेळा इतर जनसादृश्य धरुनी
जगन्नाथाचा हा गतिसमय सांभाळि जननी ॥ ४७ ॥

शरीरीं चंद्राभा विशदशशिशोभा सुमुकुटीं
धरी कुंभा पद्मा वर अभय चारी करपुटीं
पटीं पीयूषाची रुचि रुचिर संस्थान मकरीं
अशा तूतें ध्याती नरवर न त्यां दुर्गति करी ॥ ४८ ॥

दरस्मितसमुल्लसद्वदनकान्तिपूरामृतै-
र्भवज्वलनभर्जितानिशमूर्जयन्ती नरान् ।
चिदेकमयचंद्रिकाचयचमत्कृतिं तन्वती
तनोतु मम शंतनोः सपदि शंतनोरङ्गना ॥ ४९ ॥

मन्त्रैर्मीलितमौषधैर्मुकुलितं त्रस्तं सुराणां गणैः
स्रस्तं सांद्रसुधारसैर्विदलितं गारुत्मतैर्ग्रावभिः ।
वीचिक्षालितकालियाहितपदे स्वर्लोककल्लोलिनि
त्वं तापं निरयाधुना मम भवज्वालावलीढात्मनः ॥५०॥

द्यूते नागेन्द्रकृत्तिप्रमथगणमणिश्रेणिनंदीन्दुमुख्यं
सर्वस्वं हारयित्वा स्वमथ पुरभिदि द्राक् पणीकर्तुकामे ।
साकूतं हैमवत्या मृदुलहसितया वीक्षितायास्तवाम्ब
व्यालोलोल्लासिवल्गल्लहरिनटघटीताण्डवं नः पुनातु ।५१।

विभूषितानंगरिपूत्तमांगा सद्यःकृतानेकजनार्तिभंगा ।
मनोहरोत्तुंगचलत्तरंगा गंगा ममांगान्यमलीकरोतु ॥५२॥

इमां पीयूषलहरीं जगन्नाथेन निर्मिताम् ।
यः पठेत्तस्य सर्वत्र जायन्ते सुखसंपदः ॥ ५३ ॥

---

सुमंदहसितें स्फुरे वदनदीप्ति पीयूषसि
तिणें निववि मानवां भवदवाग्नि तप्ता कसी ।
धरी विशद चित्प्रभामय अपूर्वरूपा तया
करू मम सुखी तनू त्वरित शंतनूची प्रिया ॥ ४९ ॥

मंत्रां मौन्य पडे महौषधिगती संकोचल्या देवही
त्रस्त स्रस्त सुधारसाख्य गरुडग्रावार्थ केवीं मही ।
हे मंदाकिनि कालियास दमितां धूसी पदा त्याचिया
आतां तूं भवनागदंश जननी तापा हरी माझिया ॥ ५० ॥

दूर्तीं चर्मा द्विपाच्या प्रमथगणमणी नंदि चंद्रादि सारीं
हारी सामग्र अंबा मग पर्णी अपणा घालुं इच्छी पुरारी ।
ऐशा संधीस तूंतें विहसुनि मिरवी पार्वती गूढभावें
क्रोधोर्मी नित्यलीला नटविशि तयि ते रक्षु आम्हां प्रभावें ।५१।

करी अलंकार शिवोत्तमांगीं
स्नानें जगाचे अघशैल भंगी
अपूर्व शोभा जिचिया तरंगा
गंगा अशी पूत करू ममांगा ॥ ५२ ॥

अमृताची लहरी ही । जगन्नाथकवीकृता ।
जो पढे त्यासि सर्वत्र । होतील जयसंपदा ॥ ५३ ॥



---

*Printed by* :—S. R. Sardesai, B.A., LL.B., Navin Samarth Vidyalaya's
Samarth Bharat Press, 41 Budhwar Peth, Poona 2.

*Published by* :—Dr. N. G. Sardesai, L.M. & S.,
for the Oriental Book Agency, 15 Shukrawar, Poona 2.

## श्रीवाल्मीकिनाविरचितं गंगाष्टकं स्तोत्रम् ।

मातः शैलसुतासपत्नि वसुधाशृङ्गारहारावलि
स्वर्गारोहणवैजयन्ति भवतीं भागीरथीं प्रार्थये ।
त्वत्तीरे वसतस्त्वदम्बु पिबतस्त्वद्वीचिषु प्रेङ्खतः
त्वन्नाम स्मरतस्त्वदर्पितदृशः स्यान्मे शरीरव्ययः ॥ १ ॥
त्वत्तीरे तरुकोटरान्तरगतो गंगे विहंगो वरं
त्वन्नीरे नरकान्तकारिणि वरं मत्स्योऽथवा कच्छपः ।
नैवाऽन्यत्र मदान्धसिन्धुरघटासंघट्टघण्टारणत्—
कारत्रस्तसमस्तवैरिवनितालब्धस्तुतिर्भूपतिः ॥ २ ॥
उक्षा पक्षी तुरग उरगः कोऽपि वा वारणो वा
वाराणस्यां जननमरणक्लेशदुःखासहिष्णुः ।
न त्वन्यत्र प्रविरलरणत्किंकिणीक्वाणमिश्रं
वारस्त्रीभिश्चमरमरुता वीजितो भूमिपालः ॥ ३ ॥
काकैर्निष्कुषितं श्वभिः कवलितं गोमायुभिर्लुण्ठितं
स्रोतोभिश्चलितं तटाम्बुलुलितं वीचीभिरान्दोलितम् ।
दिव्यस्त्रीकरचारुचामरमरुत्संवीज्यमानः कदा
द्रक्ष्येऽहं परमेश्वरि त्रिपथगे भागीरथि स्वं वपुः ॥ ४ ॥
अभिनवबिसवल्लीपादपद्मस्य विष्णो-
र्मदनमथनमौलेर्मालतीपुष्पमाला ।
जयति जयपताका काप्यसौ मोक्षलक्ष्म्याः
क्षपितकलिकलङ्का जाह्नवी नः पुनातु ॥ ५ ॥
एतत्तालतमालसालसरलव्यालोलवल्लीलता—
च्छन्नं सूर्यकरप्रतापरहितं शंखेन्दुकुन्दोज्ज्वलम् ।
गन्धर्वामरसिद्धकिन्नरवधूत्तुङ्गस्तनास्फालितं
स्नानाय प्रतिवासरं भवतु मे गांगं जलं निर्मलम् ॥ ६ ॥
गांगं वारि मनोहारि मुरारिचरणच्युतम् ।
त्रिपुरारिशिरश्चारि पापहारि पुनातु माम् ॥ ७ ॥
पापापहारि दुरितारि तरंगधारि । शैलप्रचारि गिरिराजगुहाविदारि ।
झंकारकारि हरिपादरजोऽपहारि । गांगं पुनातु सततं शुभकारि वारि ॥८॥
गंगाष्टकं पठति यः प्रयतः प्रभाते । वाल्मीकिना विरचितं शुभदं मनुष्यः ।
प्रक्षाल्य गात्रकलिकल्मषपंकमाशु मोक्षं लभेत्पतति नैव नरो भवाब्धौ ॥

इति श्रीवाल्मीकिनाविरचितं गंगाष्टकंस्तोत्रं संपूर्णम् ।

---